श्रीगुरुरुवाच । सम्यक् पृष्टं त्वया विद्वन् ! सावधानेन तत् शृणु । प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना । भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थसम्बन्धो नभसो नीलतादिवत् । स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यगबोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीवभावो न सत्यो मोहापाये नास्त्यवस्तुस्वभावः । यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् । रज्ज्वां सर्पोभ्रान्तिकालीनएव भ्रान्तेर्नाशे नैव सर्पोऽपि तद्वत् । अनादित्वमविद्यायाः कार्य्यस्यापि तथेष्यते । उत्पन्नायान्तु विद्यायामाविद्यिकमनाद्यपि । प्रबोधे स्वप्नवत् सर्व्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् । अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः । यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि । जीवत्वं न ततोऽन्यस्तत्स्वरूपेण विलक्षणः । सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः । विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं सम्यक् ज्ञानं श्रुतेर्मतम् । तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति । ततोविवेकः कर्त्तव्यः प्रत्यगात्मसदात्मनोः । जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् । यथा भाति, तथात्मापि दोषाभावे स्फुटप्रभः । असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत् प्रतीचः । ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः । अतोनायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः। दृश्यत्वात् व्यभिचारित्वात् नानित्योनित्य इष्यते"। आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६पृ० उक्तः धननिचयात्मककोषस्य राज्याङ्गतामाह "स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते । सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्" मनुः "स्वामी राजा अमात्योमन्त्र्यादिः । पुरं राज्ञः कृतदुर्गनिवासनगरं, राष्ट्रं देशः, कोषोवित्तनिचयः, दण्डो हस्त्यश्वरथपादातं, मित्रं त्रिविधं सप्तमाध्यायोक्तमित्येते सप्त प्रकृतयोऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते । ततः किमतआह सप्तानामिति । आसां राज्यस्य प्रकृतीनां सप्तानां क्रमिकोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याविनाशरूपं व्यसनं गरीयोजानीयात् । तथाहि मित्रव्यसनात् स्वबलव्यसनं गरीयः सम्पन्नबलस्यैव मित्रानुग्रहे सामर्थ्यात् । एवं बलात् कोषोगरीयान् कोषनाशे बलस्यापि नाशात् । कोषाद्राष्ट्रं गरीयः राष्ट्रनाशे कुतः कोषोत्पत्तिः । एवं राष्ट्राद्दुर्गं गरीयो दुर्गादेव यवसेन्धनादिसम्पन्नाद्राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्वाङ्गवैकल्यात् । अमात्यादपि आत्मा सर्वस्यात्मार्थत्वात्" कुल्लू०

कोषसञ्चयस्यावश्यकता युक्तिकल्पतरौ दर्शिता यथा

"कोषो महीपतेर्जीवो न तु प्राणाःकथञ्चन । द्रव्यं हि देहो भूपस्य न शरीरमिति स्थितिः । धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च । आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा । धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्म्मः कामस्यैव कथञ्चन । अधर्म्मान्निधनं कुर्य्यात्तद्धनं गृह्यते परैः । स्वयं पापस्य पात्रं स्यात् सिंहो हस्तिवधादिव । तादात्विको मूलहरः कदर्य्यस्त्रिविधो ऽर्जकः । उत्पन्नार्थव्ययकरो यो भविष्यन्नाशया । स तादात्विक आख्यातः कल्याणी तस्य नायतिः । यः पित्राद्यर्ज्जितं वित्तमन्यायेन तु भक्षयेत् । स मूलहर आख्यातस्तदुदर्कोऽपि चाशुभः । स कदर्य्यस्तु यः स्वात्मपीडनैरर्थसञ्चयी । तद्धनं राजदायादतस्कराणां निधिर्भवेत् । रक्षा च राजकोषस्य स्तोकस्तोकेन वर्द्धते । अञ्जनञ्च धनञ्चैव स्तोकस्तोकेन हीयते । कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् । भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृत्तता । राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीवलाः । तेभ्यः कृषिस्ततस्त्वर्था अर्थेभ्यः सर्वसम्पदः । शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा । तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः । एकस्यां गुणहीनायां कृषिमन्यत्र कारयेत्" ।

तत्सञ्चयोपायाश्च भा० शा० ८८अ० दर्शिताः यथा

"यदा राजासमर्थोऽपि कोषार्थे स्यान्महामते!।" इत्यादि युधिष्ठिरप्रश्ने भीष्मोक्तिः "यथादेशं यथाकालं यथाबुद्धि यथाबलम् । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः। यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत्" इत्युपक्रमे "मधुदोहमित्याद्युक्तं" तच्च करशब्दे १६८७पृ० दर्शितम् । तत्र ८०अ० इत्युक्तिः प्रामादिकी ८८अ० इत्येव साधु । ततः परं कियदन्तरे

"प्रयोगं कारयेत्तांस्तान् तथा बलिकरांस्तथा । कृषिगोरक्षवाणिज्यं यच्चान्यत् किञ्चिदीदृशम् । पुरुषैः कारयेत्

कर्म्म बहुभिः कर्म्मभेदतः। नरश्चेत् कृषिगोरक्षावा-
णिज्यञ्चाप्यनुष्ठितौ। संशयं लभते किञ्चित्तेन राजा
विगर्ह्यते। धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः।
वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै। अङ्गमेत-
न्महद्राज्ये धनिनो नाम भारत!। ककुदं सर्वभूतानां
धनस्थो नात्र संशयः। प्राज्ञः शूरो धनस्थश्च स्वामी
धार्म्मिक एव च। तपस्वी सत्यवादी च बुद्धिमांश्चापि
रक्षति। तस्मात् सर्वेषु भूतेषु प्रीतिमान् भव पार्थिव!।
सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय। एवं दण्डञ्च
कोषञ्च मित्रं भूमिञ्च लप्स्यसे। सत्यार्ज्जवपरो राज-
न्मित्रकोषबलान्वितः"। १६तदाधारे गृहे जटा० (खाज-
नाचर) "तस्मात् द्विजेभ्योदत्त्वार्द्धमर्द्धं कोषे निवेशयेत्"
मनुः। १७मेघे निघ०।

**कोश(ष)कार** पु० कोशं(षं) करोति कृ—ण्वुल् उप०स०। १खड्-
गाद्यावरणकारके स्त्रियां टाप् सि०कौ० तस्य पत्नी ङीष्।
मुग्धबोधमते ङीप्। "नैकृत्यै कोषकारीम्" यजु०
३०।१४। "खड्गावरणकोश(ष)कारिणीम् स्त्रियम्" वेददी०।
२इक्षुभेदे शब्दरत्ना०। कोषं स्ववेष्टनं तन्तुभिः करोति
कृ—अण्। ३कीटभेदे (गुटिपोका)। "संवेष्टमानं बहुभिः
मोहात्तन्तुभिरात्मजैः। कोषकारमिवात्मानं वेष्टयन्नाव-
बध्यते" भा०शा० ३३१अ०।

**कोश(ष)कृत्** त्रि० कोषं खड्गाद्यावरणं वेष्टनं वा करोति
कृ—क्विप् ६त०। १कोषकारार्थे। २इक्षुभेदे सुश्रुतः "नेपा-
लो दीर्घपत्रश्च नीलपोरोऽथ कोषकृत्" सुश्रु० इक्षुभेदोक्तौ

**कोश(ष)चञ्चु** पु० कोशः चञ्चुर्यस्य। सारसपक्षिणि शब्दच०

**कोश(ष)पाल** पु० कोषं राज्याङ्गधनसंचयं पालयति पालि—
अण् उप०स०। कोषरक्षके तल्लक्षणमुक्तं हेमा० परि०ख०
लक्षणसमुच्चये। "धातुवस्त्राजिनादीनां रत्नानां प्रविभा-
गवित्। विज्ञाता फल्गुसाराणामसंहार्य्यः शुचिः
सदा। निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः। आयद्वारेषु
सर्व्वेषु धनाध्यक्षसमानराः। व्ययद्वारेषु च तथा
कर्त्तव्याः पृथिवीक्षिता। आयव्ययज्ञो लोकज्ञो देशोत्-
पत्तिविशारदः। कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादर्थरक्ष-
कः"। "निर्यान्तु कोश(ष)पालाश्च कुरुक्षेत्रमतं प्रति"
भा० आश्र० २२अ०। ण्वुल्। कोश(ष)पालकोऽप्यत्र।

**कोश(ष)फल** न० कोशे(षे) फलमस्य। कक्कोले अमरः।
२महाकोषातक्याम् स्त्री अजा० टाप्। ३वपुष्यां च स्त्री
राजनि० गौरा० ङीष्।

**कोशयी** पु० कुश—बा० अयी। खशादिपुरुषे। "कोशयीरिव
वाजिनोऽदात्" ऋ० ६।४७।२२। छान्दसः प्रयोगः

**कोश(स)ला** स्त्री कुश(स) इषा० कलं नि० गुणः। १सरयू-
तटस्थायामयोध्यायां पुर्य्यां २तद्युक्ते देशे पु०ब०व०। "कुन्त-
लाः काशिकोश(स)लाः" भा० भी०९अ० जनपदकथने।
पूर्व्वदिक्स्थदेशभेदेषु प्राच्यकोशलेषु पु०ब०व० ते च कोशल-
कावर्द्धमानश्च" इ०व० कर्म्मविभागे पूर्व्वस्यामुक्ताः। कचि-
देकत्वमपि। "कोश(स)लोनाम मुदितः स्फीतोजनपदो-
महान्। निविष्टः सरयूतीरे पशुधान्यसमृद्धिमान्"
रामा० १।५।५। कोशलदेशोद्विविधः प्राच्योत्तरभेदात् तत्र
अयोध्यायुक्तदेशस्योत्तरकोशलत्वम् "पितुरनन्तरमुत्तरको-
शलान्" "तस्मै विसृज्योत्तरकोश(स)लानाम्" "प्रिया-
सखीरुत्तरकोशलेश्वरः" रघुः प्राच्यकोशलास्तु कोसल-
शब्दे वक्ष्यते। तद्देशस्य राजा ञ्य। कौस(श)ल्य कोशलदे-
शनृपे। "कौ(श)सल्यदत्युत्तरको(श)सलानाम्" रघुः स्त्रियां
टाप् कौसल्या। "कौसल्यानन्दिवर्द्धनोरामः" रामा०

**कोश(स)लात्मजा** स्त्री कोश(स)लाः पूर्व्वकोश(स)लदेशः
लक्षणया तदधिपः तस्यात्मजा। प्राच्यकोसलाधिपनृप-
सुतायाम् राममातरि शब्दर०

**कोशलिक** न० कुशलाय कर्म्मणे दीयते ठक् पृषो० ओत्त्वम्।
निजकार्य्यसाधनार्थं राजादिकार्य्यकरेभ्योदीयमाने उत्-
कोचे (घुस) हेम० कौशलिकमिति पाठान्तरं साधु

**कोश(ष)वत्** त्रि० कोषः(शः) अस्त्यस्य मतुप् मस्य वः। १कोश(ष)-
युक्ते। "धर्म्मात्मा कोषवांश्चापि देवराज इवापरः" भा०
आनु० २अ०। स्त्रियां ङीप् कोश(ष)वती सा च २को-
षातकीवृक्षे "दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत्
कोषवतीरसेन" "शुकाख्याकोषवत्योश्च मूलं मदन एव
च" "जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु
चैव" इति च सुश्रु०

**कोश(ष)वासिन्** पु० कोशे(षे) वसति वस—णिनि ७त०। को-
षाभ्यन्तरस्थे जन्तुभेदे "कोशवासिनां पादिनां च तदेव"
(अनुपानम्) सुश्रु० कोशस्थशब्दे विवृतिः

**कोश(ष)वृद्धि** पु० कोषस्य मुष्कस्य वृद्धिर्यत्र। १कुरण्डक वृक्षे।
६त०। २अण्डकोषवृद्धौ रोगभेदे ३धनसञ्चयवृद्धौ च स्त्री

**कोश(ष)शायिका** स्त्री कोषे(शे) पिधानमध्ये शेते शी
ण्वुल् ७त० अतइत्त्वम्। क्षुरिकायां जटाधरः

**कोश(ष)स्कृत्** पु० कोशं(षं) करोति कृ—क्विप् नि० सुट्। कोष-
कारके जन्तुभेदे (गुटिपोका) "त्यजेत् कोश(ष)स्कृदिह

शानः" भाग० ७।४।११ "कोश(ष)स्था कोशकारः" श्रीधरः

कोश(ष)स्थ पु० कोशे(षे)तिष्ठति स्था—क ७त०। सुश्रुतोक्ते शङ्खादिके जन्तुभेदे। "आनूपवर्गस्तु पञ्चविधः" इत्युपक्रम्य कोशस्था इत्युद्दिश्य "शङ्ख शङ्खनख शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः पादिनश्च" इत्युक्त्वा कूर्मादींश्चोक्त्वा तन्मांसगुणाउक्ता यथा "शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः। शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः"

कोशा(षा)गार न० ६त०। धनागारे (खाजनाघर) "कोषागारमायुधागारमश्वशालां हस्तिशालाञ्च कुडुः" भा०व० १६७ कोश(ष)गृहादयोऽप्यत्र न० [कड़ा] क्षुपभेदे हारा०

कोशा(षा)ङ्क न० कोशः(षः) इवाङ्कमस्य। बद्धमूले इत्कटौ(ख्रो-

कोशा(षा)तक पु० कोश(ष)मतति अत—क्वुन्। १कठे वेदशाखाभेदे २पटोल्याम् घोषके (तरइ) (झींगा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष्। भावप्र० इयं राजसेव्यत्वात् महत्त्वाद्वा राजोपपदा निर्दिष्टा "धामार्गवः पीतपुष्पा जालिनी कृतवेधना। राजकोशातकी चेति तथोक्ता राजिमत्फला। राजकोशातकी शीता मधुरा कफवातला। पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत्" "कोषातकीवल्लिभवाऽप्यम्लवास्तक्रेण युक्ताः सुघृतेन संस्कृताः। सम्भर्जिताः सैन्धवहिङ्गुबाधिते तैलेऽतिरुच्या बहुपुष्टिदायकाः" वस्त्राःफलम् अम्ल् हरीतक्या० लघु। तत्फले स्त्री "कोशातकीपुष्पगुलुच्छकान्तिभिः" माघः

कोशा(षा)म्र पु० को(शे)षे आम्र इव। १फलप्रधानवृक्षभेदे (कोषाम) "कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः। तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम्। पक्वं तु दीपनं रुच्यं लघूष्णं कफवातहृत्" भावप्र०। (केओड) २फलवृक्षे राजवल्लभः

कोशि(षि)न् त्रि० कोश(ष)+अस्त्यर्थे इनि। १कोश(ष)युक्ते आमोपपदकोषी तु सुश्रुतोक्ते कर्णबन्धनजे रोगभेदे "बद्धमात्रस्तु यः कर्णः सहसैवाभिवर्द्धयेत्। आमकोषी समाख्यातः क्षिप्रमेव विशुध्यते"। २आम्रवृक्षे पु० शब्दमाला।

कोशि(षि)ला स्त्री कोश+अस्त्यर्थे पिच्छादित्वात् इलच्। सूक्ष्मपर्ण्याम् राजनि०

कोशी(षी) स्त्री कुश—(कुष) अच् गौरा० ङीष्। १चर्म्मपादुकायाम् २धान्याद्यग्रभागे च (शुङ्गा) हेम०

कोश्य(ष्य) त्रि० कोशे हृदय०कोशे(षे)भवः यत्। हृदयकोश मांसपिण्डे "प्लिहानि कोश्याभ्याम्" यजु० २५।८ "कोश्याभ्यां हृदयस्य मांसपिण्डाभ्याम्" वेददी०

कोष पु०न०। कुष—पचादि० अच्। १कोशशब्दार्थे कोशशब्दे विवृतिः। २ऋषिभेदे। "अथोह कोषा धावयन्तः शत० ब्रा० १०।५।५।८ "कोषानाम ऋषयः" भा०।

कोषक पु० कोष—स्वार्थे क। अण्डकोषे शब्दर०

कोषला स्त्री० कोष—अलच्। अयोध्यायां पुर्यां शब्दरत्ना०

कोष्ठ पु० कुष—थन्। १गृहमध्ये, २उदरमध्ये, ३धान्यादिस्थापने ४कुसूले च (कुठी) ५आत्मीये त्रि० मेदि० "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः पुष्पुसश्च कोष्ठ इत्यभिधीयते" ६सुश्रुतोक्ते आमाग्निपक्वमूत्ररुधिरस्थाने "प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम्" "चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं न्यणाम्" सुश्रु० "भुक्तं भक्तमिदं कोष्ठे कथमन्नं विपच्यते" भा० आश्व०५७अ० "पतिं भार्योपतिष्ठेत ध्यायेत् कोष्ठगतं यथा" भा० भी० ६।१८। ५२। अकथहादिचक्रचतुःपार्श्वस्थरेखाचतुष्कान्विते ७स्थानभेदे अकथहशब्दे ८८पृ० उदा०। ८पदे स्थानमात्रे "पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम्। यत् पञ्चविपणम् क्षेत्रं पञ्चप्रकृतिस्त्रीधरम्। पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो!। तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः। विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया" भाग० ४।२८।५१।५२।५२। कुसूले "जरत्कोष्ठात् व्रीहीन्कर्कराभिमिश्रानाहरति" कौषीतकिब्रा०

कोष्ठागार न० कोष्ठमगारमिव। धान्यधनादेःस्थापने गृहे (कुठी) "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः "कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः सुसंवृतम्। सदास्तु सत्सु संन्यस्तं धनधान्यपरोभव" भा० आ० ११९अ०

कोष्ठागारिक त्रि० कोष्ठागारे भवः तत्र नियुक्तोवा वा० ठञ्। १कोष्ठागारभवे। "अत्यर्थं स्रवति रक्तं कोष्ठागारिकाङ्गार वृत्तपिण्डेत्यादि" सुश्रु० २कोष्ठागारे नियुक्ते च।

कोष्ठागारिन् पु० कोष्ठरूपमगारमिवास्त्यस्य इनि। कीटभेदे "कोष्ठागारी कृमिकरश्च मण्डलपुच्छकः" सुश्रुते प्राणनाशककीटोक्तौ

कोष्ण न० ईषदुष्णम् कोः कादेशः। १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः। "भुवं कोष्णेन पीनोघ्नी मेध्येनावभृथादपि" रघुः "घृतेन सा शान्तिमुपैति जिह्वा कोष्णेन यष्टीमधुकान्वितेन" "शोथं सतोदं कोष्णेन सर्पिषा परिषेचयेत्" सुश्रु०

**कौसल** पु॰ ब॰व॰। कुस—अलच्। देशभेदे। तेऽभिजनोऽस्य तेषां राजा वा ष्यञ्। कौसल्य पित्रादिक्रमेण तद्देशवासिनि बहुषु तस्य लुक् कोसलाः। कोशलशब्दे विवृतिः। कोसलदेशस्य द्विविधः पूर्व्वोत्तरभेदात् “कोसलाधिपतिं चैव तथा वेणातटाधिपम्। कान्तारकांश्च समरे तथा प्राक्कोसलान् नृपान्” भा॰ स॰ ३०अ॰ “दक्षिणाये च पाञ्चालाः पूर्व्वाः कुन्तिषु कोसलाः” १३अ॰ उत्तरकोसलास्तु कोशलशब्दे दर्शिताः

**कौहल** पु॰ कौ हलति स्पर्द्धते अच् पृषो॰। १वाद्यभेदे मेदि॰ २मद्यभेदे च हेम॰ ३नाटकशास्त्रकर्त्तृमुनिभेदे तस्यापत्यम् शिवा॰ अण्। कौहल तदपत्ये पुंस्त्री॰ डलयोरैक्यात् कौहडोऽप्यत्र

**कौहनीय** पु॰ ऋषिभेदे “उपयातायार्घ्यमिति कौहनीयाः” गोभि॰ गृ॰सू॰। उपयातायाचार्य्यं समीपं गतायार्घ्यं देयमिति कौहनीया आचार्य्या आहुः” सं॰त॰रघुनन्दनः

**कौहित** पु॰। ऋषिभेदे। ततोऽपत्ये शिवा॰ अण्। कौहित तदपत्ये पुंस्त्री॰

**कौकिली** स्त्री कोकिलेन दृष्टा अण्। कोकिलदृष्टायां सौत्रामण्याम्। “द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च” लाट्या॰ श्रौ॰सू॰।

**कौकुट्टक** पु॰ ब॰व॰। देशभेदे स च दक्षिणस्थः। “अथापरे जनपदा दक्षिणा भरतर्षभ!” इत्युपक्रमे “कौकुट्टकास्तथा चोलाः कौङ्कणाः मालवानराः” भा॰ भी॰ ९अ॰।

**कौकुरुक** पु॰ ब॰ व॰। जनपदभेदे।

**कौकुर** पु॰ ब॰ व॰। कुकुराणां देशः अण्। १देशभेदे। “अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह” भा॰ सभा॰ ५१अ॰। कुकुराः यादवभेदा एव स्वार्थे अण्। कुकुरवंश्ये २नृपभेदे। “श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान्” भा॰ मौ॰ ५अ॰।

**कौकृत्य** न॰ कुत्सितं कृत्यं स्वार्थे अण्। १अयुक्तकरणे २अनुतापविषये च मेदि॰।

**कौक्कुटिक** पु॰ कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक्। १दाम्भिके, कीटादिवधभीत्या पादक्षेपस्थानमात्रदृष्टरि संन्यासिनि च मेदि॰। सन्यासी हि हिंसाभयात् पादन्यास प्रदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य यातीति तथात्वम्।

**कौक्कुटिकन्दल** पुंस्त्री कुक्कुटस्यायम् इञ् कौक्कुटिः स इव कन्दलः। (वेड़ासाप) सर्पभेदे त्रिका॰ स्त्रियां ङीप्।

**कौक्ष** त्रि॰ कुक्षौ बद्धः असिभिन्नः। कुक्षिबद्धे अलङ्कारादौ

**कौक्षक** त्रि॰ कुक्षौ देशभेदे भवः धूमा॰ वुञ्। कुक्षिदेशभवे

**कौक्षेय** त्रि॰ कुक्षौ भवः “दृतिकुक्षीत्यादिना” पा॰ढञ्। कुक्षौ भवे। “असिं कौक्षेयमुद्यम्य चकाराप्रनसं सुखम्” भट्टिः

**कौक्षेयक** पु॰ कुक्षौ बद्धः असिः ढकञ्। कुक्षिबद्धे खड्गे “कौक्षेयकेण सन्निहितविषधरेणेव चन्दनलता” काद॰। “बहुतीक्ष्णकौक्षेयक.” दशकुमा॰।

**कौङ्क** पु॰ कोङ्कएव स्वार्थे अण्। कोङ्कणदेशे शब्दरत्ना॰

**कौङ्कण** पु॰ ब॰ व॰। कोङ्कण+स्वार्थे अण्। १कोङ्कणदेशे “कौङ्कणाः मालवानराः” भा॰भी॰ ९अ॰। तस्य राजा अण् २तद्देशनृपे च।

**कौङ्किण** न॰ ब॰व॰। कोङ्कण+पृषो॰। कोङ्कणदेशे शब्दर॰।

**कौञ्च** पु॰ क्रुञ्चएव स्वार्थे अण् पृषो॰। क्रौञ्चपर्व्वते त्रिका॰।

**कौञ्जायन्य** पु॰ कुञ्जा॰ गोत्रापत्ये च्फञ् ततः स्वार्थे ञ्य। १कुञ्जर्षिगोत्रापत्ये स्त्रियान्तु न ञ्य किन्तु गोत्रप्रत्ययान्तत्वात् ङीष् कौञ्जायिनी सा च २ब्राह्मण्याम् जटाधरः।

**कौञ्जि** पुंस्त्री॰ कुञ्जस्यर्षेरनन्तरापत्यम् अतइञ्। कुञ्जर्षेरनन्तरापत्ये स्त्रियां वा ङीप्।

**कौट** त्रि॰ कूटे अद्रिशृङ्गे भवः उत्सा॰ अञ्। १कुटजवृक्षे (कुरचो) भावप्र॰ कुटयां प्रायभवः अण्। २स्वतन्त्रे त्रि॰। कूटस्य भावः अण्। ३मिथ्याकथने ४मिथ्यासाक्ष्ये च

**कौटकिक** त्रि॰ कूटमेव कूटकं मांसकूटं तत्पण्यमस्य ठञ्। मांसविक्रेतरि शब्दरत्ना॰

**कौटज** पु॰ कुटमेव कौटं तत्र जातः। कुटजवृक्षे रायमुकुटः

**कौटजभारिक** त्रि॰ कुटजस्य भारं हरति वहत्यावहति वा वंशा॰ठञ्। १कुटजभारहारिणि २तद्वाहके ३तदावाहके च

**कौटजिक** त्रि॰ कुटजं भारभूतं हरति वहति आवहति वा ठञ्। भारभूतकुटजस्य १हारके २वाहके ३आवाहके च

**कौटतक्ष** पु॰ कोटः स्वतन्त्रः तक्षा टच् समा॰ स्वतन्त्रे तक्षणि

**कौटल्य** न॰ कुट-कलच् स्वार्थे ष्यञ्। कौटिल्यशब्दार्थे हेमच॰

**कौटसाक्ष्य** न॰ कूटसाक्षिणोभावः कर्म्म वा ष्यञ्। मिथ्यासाक्ष्ये “कौटसाक्ष्यं सुहृद्वधः” मनुना सुरापानसमानकोक्ता तस्यानुपातकता। कौटसाक्ष्यदण्डस्य मनुना दर्शितो यथा

“यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत् कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेत्। लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांश्च प्रवक्ष्याम्य-

शुपूर्व्वः शः। लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्व्वन्तु साहसम्। भयाद्द्वै मध्यमं दण्ड्यो मैत्रात् पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्व्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिभिः। धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णान् धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"।

**कौटि** पुंस्त्री कूटस्यापत्यम् इञ्। कूटस्य मिथ्याशंसिनोऽपत्ये स्त्रियां तु क्रौड्यादि० ष्यङ्। कौट्या

**कौटिक** त्रि० कूटेन मृगबन्धनयन्त्रेण चरति ठक्। मांसविक्रयोपजीविनि अमरः। कूट+चतुरर्थ्यां कुमु० ठक्। कूटसन्निकृष्टदेशादौ त्रि०।

**कौटिलिक** त्रि० कुटिलिका व्याधानां गतिभेदः कर्म्मारोपकरणभूतं लौहञ्च तया हरति मृगान् अङ्गारान् वा। "अण् कुटिलिकायाः" पा० अण्। १व्याधे २कर्म्मकारे च सि० कौ०।

**कौटिल्य** न०कुटिलस्य भावः ष्यञ्। १वक्रीभावे "नित्यं कौटिल्ये गतौ" पा०। "कौटिल्यं कचनिचये करचरणाधरनलेषु रागस्ते" का०प्र० तच्चोपपातकम् "कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्" या० स्मृतेः। उपपातकशब्दे विवृतिः। स्वार्थे ष्यञ्। २चाणक्यमुनौ पु० राजनि० "आकर्ण्य आऽऽन्नातम्। कौटिल्यः—कुटिलमतिः स एष येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" मुद्राराक्षसम्

**कौटीगव्य** पुंस्त्री कुटीगोर्ऋषिभेदस्य गोत्रापत्यम् गर्गा० यञ्। कुटीगोर्ऋषे गोत्रापत्ये। तस्य छात्राः कण्वादि० अण यलोपः। कौटीगव, तच्छात्रे। [देशादौ

**कौटीय** त्रि० कूट+चतुरर्थ्यां कृशाश्वा० छण्। कूटसन्निकृष्ट-

**कौटीर्य्य** त्रि० कुटीरः केवल एव स्वार्थे ष्यञ्। केवले असहाये। कौटिरीर्य्या यस्याः। २दुर्गायाम् स्त्री "कौटीर्य्यां मदिरां चण्डामिलां मलयवासिनीम्" हरिवं० १७८अ०

**कौटुम्ब** त्रि० कुटुम्बं तद्भरणं प्रयोजनमस्य अण्। कुटुम्बभरणोपयोगिद्रव्ये। आहरेदित्यनुवृत्तौ "अन्यथा कौटुम्बम्" आश्व० गृ० सू० २,६,१०,

**कौटुम्बिक** त्रि० कुटुम्बे तद्भरणे प्रसृतः ठक्। कुटुम्बभरणे व्यापृते "कौटुम्बिकः क्रुध्यति वै जनाय" भाग० ५,५,१२,९,। कुटुम्बे भवः ठक्। २कुटुम्बमध्यपातिनि। "यत्र कौटुम्बिका दारापत्यादयोनाम्ना, कर्म्मणा वृकसृगाला एव" भाग० ५,१४,५,

**कौट्य** स्त्री कूटस्यापत्यम् इञ् स्त्री कौटिः सैव कौड्या ष्यङ् १कूटापत्यस्त्रियाम् कूट+चतुरर्थ्याम्। संकाशा० ण्य। २कौट्य कूटसन्निकृष्टदेशादौ त्रि०

**कौठारिकेय** त्रि० स्वल्पा कुठारी कुठारिका तस्याः इदम् शुभ्रा० ढक्। स्वल्पकुठारसम्बन्धिनि

**कौडविक** त्रि०कुडवस्य वापः ठञ्। कुडववापयोग्ये क्षेत्रादौ कुडवं तत्परिमितमन्नं सम्भवति पचति अवहरति वा ठञ्। २स्वस्मिन् कुडवमितान्नसमावेशके कटाहादौ ३तत्पाचके सूदादौ ४तदवहारके च स्त्रियां ङीप्। कुडवः परिमाणमस्य ठञ्। ५कुडवपरिमिते। संख्यापूर्व्वकत्वे पूर्व्वपदस्य न वृद्धिः द्विकौडविकः। अर्द्धपूर्व्वकस्य तु वा वृद्धिः आ(अ)र्द्धकौडविकः। असंज्ञायान्तु ठञोलुक्। द्विकुडवम् अर्द्धकुडवम् इत्यादि।

**कौड्येयक** त्रि० कुड्ड—काकार्थ्ये यत् संयोगादिलोपः कुड्या तत्र जातादि कत्र्या० ढकञ् "कुड्याया यलोपश्च" पा० ग०यलोपः। कार्कश्यकरणार्हायां भूमौ जातादौ

**कौणकुत्स्य** पु० ऋषिभेदे। "भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः" भा० आ० ८अ०।

**कौणप** पु० कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य,अण् कुणपस्तच्चर्व्वणं शीलमस्य ण वा। राक्षसे अमरः"न कौणपाः शृङ्गिणो वा न देवा नच भा०आ०१७०अ०मालुधाः"स्त्रियां ङीष्

**कौणपदन्त** पु० कौणपस्य दन्ताइव दन्ता अस्य। भीष्मे त्रिका०

**कौणपाशन** पु० कौणपानामशनमिवाशनमस्य। सर्पभेदे "हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः" भा० आ० ३५अ० नागनामोक्तौ

**कौण्डपायिन्** पु० ब०व० कुण्डमेव कौण्डं तेन पिबन्ति सोमं पा—णिनि। सोमयागकारियजमानभेदेषु।

**कौण्डपायिन** न० कुण्डपायिनामिदम् अण् नि० प्रकृतिभावः। कुण्डपायिनां (कुण्डेन सोमपायिनाम्)सम्बन्धिनि अयनरूपे सत्रभेदे कुण्डपायिनामयनशब्दे विवृतिः।

**कौण्डल** त्रि० कुण्डलमस्त्यस्य ज्योत्स्ना० अण्। कुण्डलयुक्ते त्रि० स्त्रियां ङीप्। [सन्निकृष्टदेशादौ

**कौण्डलिक** त्रि० कुण्डल+चतुरर्थ्यां कुमु० ठक्। कुण्डल

**कौण्डाग्नक** त्रि० कुण्डस्येदम् कौण्डं अग्नौ भवः वृद्धात्वान्न्युत्तरपदत्वात् वुञ्। कुण्डसम्बन्धिवह्निभवे

**कौण्डायन** त्रि० कुण्डस्यादूरदेशादि पक्षा० चतुरर्थ्यां फक्। कुण्डसन्निकृष्टादेशादौ [कुण्डिननगरजातादौ

**कौण्डिनेयक** त्रि० कुण्डिने जातादि कत्र्या० ढकञ्।

**कौण्डिन्य** पुंस्त्री कुण्डिनस्यर्षेर्गोत्रापत्यं गर्गा० यञ्। कुण्डिन गोत्रापत्ये। "कौण्डिन्यात् कौण्डिन्य" शत०ब्रा०१४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरकौण्डिनीपुत्रात् पाराशरकौण्डिनीपुत्रः" शत० ब्रा० १४।८।४।३० वंशब्राह्मणे। कुण्डिनस्य युवापत्यम् गर्गा० यञि यञन्तात् फक्। कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री "कौण्डिन्यायनाच्च कौण्डिन्यायनः" शत० ब्रा० १४।५।५।२०। कौण्डिन्यस्य छात्रः कण्वा० अण् यलोपश्च। कौण्डिन कौण्डिन्यस्यच्छात्रे। बहुषु अणोलुक् कुण्डिनादेशश्च कुण्डिनः। स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीष्यलोपौ कौण्डिनी।

**कौण्डिल्यक** पु० १सुश्रुतोक्ते शक्तन्मूत्रविषे जन्तुभेदे विषशब्दे विवृतिः। २तत्रोक्ते कीटभेदे च कीटशब्दे विवृतिः

**कौण्डोपरथ** पु०। आयुधजातिसंघे ततः स्वार्थे छ। कौण्डोपरथीय तदर्थे। "आङ्गस्त्रिगर्त्तषष्ठास्तु कौण्डोपरथदाण्डिकाः क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः" सि० कौ०। [ तस्कुतोभवे।

**कौतस्कुत** त्रि० कुतः कुतोभवः अण् टिलोपः कस्का०। कु-

**कौतस्त** त्रि० कुतस्त्यभवः अण् नि० वेदे यलोपः। कुतस्त्यभवे। "कौतस्तावध्वर्यू अरिमेजयस्य जनमेजयस्य" पारा० ब्राह्म०।

**कौतुक** न० कुतुकस्य भावः युवादि० अण् प्रज्ञा० स्वार्थे अण् वा। १कुतूहले अमरः। तच्च अद्भुतजिज्ञासातिशयः। "कौतुकागारमागात्" कुमा०। २मङ्गलार्थहस्तसूत्रे शाश्वतः "वैवाहिकैः कौतुकसंविधानैः" कुमा०। ३उत्सवे ४अभिलाषे ५नर्म्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम०।

**कौतूहल** न० कुतूहलस्य तदन्वितस्य भावः कर्म्म वा युवा० अण् प्रज्ञादि०स्वार्थे अण् वा। कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा० आ० ६२अ०। "महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति" मार्क० ८।१।

**कौतूहल्य** न० कुतूहल+ब्राह्मणा० स्वार्थे ष्यञ्। कुतूहले

**कौतोमत** पु० कुतोमतस्यापत्यम् ऋष्यण्। ऋषिभेदे। "सहस्रवाङ्गौपत्य इति कौतोमतेन" गोपथब्राह्मणम्।

**कौत्स** पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण्। कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोहिङ्करोति" आश्व०श्रौ० सू० १।२।५। "कौत्साय दत्त्वा कन्यान्तु हंसीं नाम यशस्विनीम्" भा० आनु० १३७अ०। "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघुः। बहुषु तस्य लुक्। कुत्साः तदपत्येषु। कुत्सेन दृष्टं साम अण्। कुत्सर्षिदृष्टे विकृतियागे गेये सामभेदे। तच्च साम वेगाने १६प्र० २अर्द्धे १०गानम्। "कौत्सं भवति काखं भवति" श्रुतिः।

**कौथुम** त्रि० कुथुमं वेदशाखाभेदमधीते वेद वा अण्। १कुथुमशाखाध्यायिनि तद्वेत्तरि च। तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या। कठकौथुमाः इत्यादि। "अनुवादे चरणानाम्" पा० द्वन्द्वे एकवत् प्रत्ययात् कठकौथुमम्। "स्थेणोर्लुङि" वार्त्ति० स्थाधातोरिणधातोश्च लुङ्प्रयोग एव तस्य तथात्वं नियमितम् [ ब्रह्मवै०जातिशब्दे विवृतिः

**कौदालीक** पुंस्त्री० रजक्यां तीवराज्जाते संकीर्णवर्णभेदे

**कौद्रविक** न० कोद्रवो निमित्तमस्य ठञ्। सौवर्चललवणे राजनि० [ धान्यभवनयोग्ये क्षेत्रे अमरः

**कौद्रवीण** न० कोद्रवस्य भवनं क्षेत्रं कोद्रव+खञ्। कोद्रव

**कौद्रा(न्द्रा)यण** पुंस्त्री० कुद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञन्तात् कौद्रिः(न्द्रिः) इञन्तत्वात् यून्यपत्ये फक्। कुद्रि(न्द्रि) नामर्षेर्युवापत्ये ततः अरीहृ० चतुरर्थ्यां वुञ्। कौन्द्रायणक तत्सन्निकृष्टदेशादौ त्रि०

**कौनख्य** न० कुनखिनोभावः ष्यञ् टिलोपः। कुत्सितनखरूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकजचिह्नम् "सुवर्णचौरः कौनख्यम्" मनूक्तेः। [ निर्वृत्तादौ

**कौन्तायनि** त्रि० कुन्ती+चतुरर्थ्यां कर्णा० फिञ्। कुन्ती-

**कौन्तिक** कुन्तः प्रहरणमस्य ठञ्। कुन्तास्त्रेण युद्धकारके अमरः। [पृथौ अमरः

**कौन्ती** स्त्री कुन्तिषु देशेषु भवा अण् ङीप्। भक्ष्यगन्धिन्यो-

**कौन्तेय** पु० कुन्त्या अपत्यम् ढक्। १युधिष्ठिरादिषु त्रिषु। "कौन्तेय! प्रतिजानीहि न मे कर्म्मफले स्पृहा" गीता २अर्ज्जुनवृक्षे राजनि० तस्य तत्तुल्यनामत्वात्तथात्वम्।

**कौप** त्रि० कूपस्येदमण्। कूपसम्बन्धिनि जलादौ "सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" सुश्रुते तद्गुणा उक्ताः। "वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवम्" सुश्रुतोक्तकाले तस्य सेव्यता। स्त्रियां ङीप्।

**कौपीन** न० कूपे पतनमर्हति खञ् अकार्य्ये नि०। १अकार्य्ये २पापे ३गुह्यप्रदेशे अमरः ४चीरे त्रिका० ५मेखलाबद्धे वस्त्रखण्डे (कपनी) मेदि० तद्द्वारेण कूपे पतनात् तस्य तथात्वम्। अकार्य्यवदाच्छाद्यत्वात् ६पुरुषलिङ्गे शब्दचि० तदावरकतया वस्त्रखण्डस्य कौपीनत्वम्। "कौपीनवन्तः खलु भाग्यवन्तः" पुरा० "कौपीनाच्छादनं यावत्तावदिच्छेच्च

चीवरम्" भा० आ० ६१अ० । "अबलाखल्पकौपीनाः सुहृदः सव्यजिष्णवः" भा०अनु०४६अ० । [रूपकोषः ।

**कौपोदकी** स्त्री कौमोदकी पृषो० । विष्णुगदायां द्वि-

**कौमार** पु० अपूर्व्वपतिकां कुमारीमुपपन्नः पतिः "कौमारापूर्व्ववचने" पा० नि० । अपूर्व्वपतिकायाः कुमार्य्याः १वोढरि । कुमारस्य भावः "प्राणभृद्वयो वचनत्वात् अञ् । "जातः कुं पृथिवीं यद्वत्रां मारयेत् स कुमारकः । इति प्रधानतो विद्धि कौमारं प्रागभवावदतः"" इत्युक्तावधिके "कौमारं पञ्चमावधि" इत्युक्ते २वयोवस्थाभेदे न० । "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता । "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने" मनुः । कुमार एव स्वार्थे अण् । ३कुमारे शब्दचिन्ता० । कुमारस्य सनत्कुमारस्येदम् अण् । ४सर्गभेदे पु० स च सर्गः सनत् कुमारादिसर्ज्जनपूर्व्वकत्वात् तन्नामकः । "कौमार आर्षः प्राजापत्योमानव इत्यादि सर्गनामानि" श्रीधरः । "सएव प्रथमं देवः कौमारं सर्गमाश्रितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" भाग० १,३,७, "वैकारिकस्तु यः प्रोक्तः "कौमारस्तूभयात्मकः" भाग० ३,१०,२०,५, ५कुमारसम्बन्धिनि त्रि० "तत विद्याव्रतस्नातः कौमारं व्रतमास्थितः" भा० व० ८५अ०

**कौमारायण** पुंस्त्री० कुमारस्य गोत्रापत्यं नड़ा० फक् । कुमारनामकर्षिगोत्रापत्ये । [ कानीने

**कौमारिकेय** पुंस्त्री० कुमारिकाया अपत्यं शुभ्रा० ढक् ।

**कौमारी** स्त्री अपत्नीकं कुमारं पतिमुपपन्ना स्त्री "कौमारापूर्व्ववचने"पा०नि०ङीप् । १अगृहीतदारान्तरस्य पत्युः १भार्य्यायाम् । कुमारस्येयमण् ङीप् । २कुमार सम्बन्धिचेष्टादौ "कौमारीं दर्शयंश्चेष्टाम्" भाग०३,२,२८, कुमारस्य कार्त्तिकेयस्येयम् अण् ङीप् । ३कार्त्तिकेयशक्तौ । "कौमारी शक्तिहस्ता च मयूरवरवाहना । योद्धुमभ्याययौ क्रुद्धं रक्तवीजं महासुरम्" कौमारीशक्ति निर्भिन्नाः केचिन्नेशुर्महासुराः" देवीमाहात्म्यम्

**कौमुद** पु० "कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तितः" इत्युक्तलक्षणे १कार्त्तिकमासे । "एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् । शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः । कौमुदं तु विशेषेण शुक्लपक्षं नराधिप! । वर्ज्जयेत् सर्वमांसानि धर्मोह्यत्र विधीयते" म०त०भार०

**कौमुदी** स्त्री कुमुदस्येयं प्रकाशकत्वात् प्रिया अण् ङीप् । १ज्योत्स्नायाम् अमरः । "शशिना सह याति कौमुदी" "कुमा०१तद्वत्प्रकाशिकायाम् "त्वमस्य लोकस्य च नेत्रकौमुदी"कुमा० कौमुदस्येयम् अण् ङीप् । "कुशब्देन मही ज्ञेया मुद हर्षे० ततोद्वयम् । धातुज्ञैर्नियमैश्चैव तेन सा कौमुदी स्मृता" इत्युक्तायां २कार्त्तिकपौर्णमास्यां "कौ मोदन्ते जनायस्यान्नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तायाम् ३आश्विन पौर्णमास्याम्"आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि कौमुदी सा समाख्याता कार्य्या लोकविभूतये" ति० त० लिङ्गोक्तेः । ४दीपोत्सवतिथौ दीपोत्सवतिथिं प्रकृत्य भविष्योत्तरे "कौ मोदन्ते जनायस्यां तेन सा कौमुदी मता" "सखीजनोद्वीक्षणकौमुदीमुखम्" रघुः कौमुदी दीपोत्सवतिथिः"इति मल्लि०"५उत्सवे धरणिः" ६कार्त्तिकोत्सवे त्रिका० । स्वार्थे क । ह्रस्वे कौमुदिका ज्योत्स्नायाम् । संज्ञायां कन् । उमासखीभेदे शब्दरत्ना० कुमुद+चतुरर्थ्यां कुमुदा० ठक् । कौमुदिक कुमुदसन्निकृष्टदेशादौ त्रि०

**कौमुदीचार** पुंन० कौमुद्या ज्योत्स्नाया चारः प्राशस्त्यमत्र काले । आश्विनपौर्णमास्याम् त्रिका०

**कौमुदीपति** पु० ६त० । चन्द्रे हारा०कौमुदीनाथादयोऽप्यत्र

**कौमुदीवृक्ष** पु० कौमुद्याः प्रकाशिकायाः दीपशिखाया वृक्ष इवाधारः । दीपवृक्षे (पिलुसलसुज) हारा०

**कौमोदकी** स्त्री कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण् । विष्णुगदायाम् अमरः "कौमोदकी मोदयति स्म चेतः"माघः ।"देवैरनादिवीर्य्यस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमुदकीति सा" हरि० ८२अ०

**कौमोदी** स्त्री कुं मोदयति अण् कुमोदः विष्णुस्तस्येयमण् ङीप् । विष्णुगदायाम् शब्दरत्ना०

**कौम्भकारि** पुंस्त्री० कुम्भकारस्यापत्यं शिल्पित्वात् पक्षे इञ् । कुम्भकारापत्ये स्त्रियां वा ङीप् । पक्षे अञ् । कौम्भकार्य्य तत्रार्थे ।

**कौम्भायन** त्रि० कुम्भस्य सन्निकृष्टदेशादि पक्षा० फक् । कुम्भसन्निकृष्टदेशादौ [ष्टदेशादौ

**कौम्भायनि** त्रि० कुम्भ+चतुरर्थ्यां कर्णा०फिञ् । तत्सन्निक-

**कौम्भेयक** त्रि० कुम्भ्यां जातादि कत्र्या० ढकञ् । कुम्भीजातादौ [कृष्टदेशादौ

**कौम्भ्य** त्रि० कुम्भ+चतुरर्थ्यां सङ्काशा० ण्य । कुम्भसन्नि-

**कौरयाण** पु०कुरयाणस्य (शत्रुं प्रति कृतयानस्य)अयम् अण् भेदे पृषो०। शत्रुं प्रति कृतयानस्य सम्बन्धिनि तत्पुत्रादौ

"पाकस्य मा कौरयाण:ऋ०८।३।२१तद्भाष्ये तथार्थोक्तेः

**कौरव** पुंस्त्री० कुरोरपत्यादि उत्सा० अञ् तद्देशस्य रा जा अण् तेषु भवो वा अण् । १कुरुवंश्ये "तस्यान्ववायः सुमहान् यस्य नाम्ना स्य कौरवाः । कुरोस्तु पुत्राश्चत्वारः" हरिवं ३२अ० । २तद्देशन्टपे पु० ३कुरुसम्बन्धिनि ४तद्देशभवे च त्रि० । स्त्रियां ङीप् । "द्रुपदः कौरवान् दृष्ट्वा प्राधावत समन्ततः । शरजालेन महता मोहयन् कौरवीं चमूम्" भा० आ० १३८अ० "क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः" मेघदूतम् ।

**कौरवक** त्रि० कुरौ तद्वंशे जातादि "विभाषा कुरुयुगेनि" पा० वा वुञ् । १कुरुवंशोद्भवे । कुरवकस्येदमण् । २कुरवकसम्बन्धिनि

**कौरवायणि** पुंस्त्री कुरोरपत्यम् तिका० फिञ् । कुरुवंश्ये

**कौरवेय** पुंस्त्री कुरोपत्यं बा० ढक् । कुरुवंशेत्र । "समा हि कौरवेयाणां वयं ते चैव पुत्रक !" भा० आ० १४२अ० । "निमोत्स्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत !" भा० व० ८अ० ।

**कौरव्य** पुंस्त्री० कुरोरपत्यम् कुर्व्वादि० ण्य । १कुरुवंशेत्र । "कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्" वेणीसं० । तस्यापत्यं तिका० फिञ् । कौरव्यायणि कुरुकुलोत्पन्ने ब्राह्मणादावपत्ये पुंस्त्री कुरूणां राजा ण्य । २कौरव्य कुरुदेशराजे । स्त्रियां ङीप् कौरवी स्त्री । ण्यान्तत्वात् यूनापत्ये फिञो लुक् । कौरव्यः पिता पुत्रश्च सि० कौ० ।

**कौरुकत्य** पुंस्त्री कुरुकतस्यर्षेरपत्यम् गर्गा० यञ् । कुरुकतस्यर्षेरपत्ये युवापत्ये फिञ् । कौरुकत्यायनि तदीय युवापत्ये पुंस्त्री

**कौरुज(जा)ङ्गल** त्रि० कुरुजङ्गले जातादि अण् उत्तरपदस्य वा वृद्धिः । कुरुजङ्गलभवे

**कौरुपाञ्चाल** त्रि० कुरुपञ्चालदेशे प्रसिद्धः अण् उभयपद वृद्धिः । कुरुषु पञ्चालेषु च प्रसिद्धे । "प्रज्ञातं कौरुपाञ्चालं यज्ञतरवत्तम्" शत०ब्रा० १,७,२,८, कौरुपाञ्चालो वा अयं ब्रह्मा ११।४।१।२।

**कौर्प्य** पु० "क्रियतावुरिजित्तमकुलीरलेयपाथेययूककौर्पाख्याः । तौक्षिकआकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" दीपिकोक्ते वृश्चिकराशौ ।

**कौर्म्म** न०कूर्म्ममधिकृत्य कृतो ग्रन्थोः अण्, कूर्म्मस्येदम् अण् वा । १कूर्म्मपुराणे २कूर्म्मसम्बन्धिनि त्रि० ।

**कौल** त्रि० कुले भवः स्वमिन्नः अण् । सत्कुलभवे १कुलीने श्रुनि तु कौलेयक इत्येव । कुले कुलाचारे रतः तं वेत्ति वा अण् । २तन्त्रोक्तकुलाचाररते ३तदाचारवेदिनि च । "दिव्यभावरतः कौलः सर्व्वत्र समदर्शनः" कुलार्णवः । 'पशोर्वक्त्राल्लब्धमन्त्रः पशुरेव न संशयः । वीराल्लब्धमनुर्वीरः कौलाच्च ब्रह्मविद्भवेत्" महानीलतन्त्रम् । कुलं कुलाचारमधिकृत्य कृतो ग्रन्थः अण् । ४कुलाचारप्रवर्त्तके ग्रन्थे कौलोपनिषदादौ ।

**कौलक** त्रि० कूले भवः सौवीरः धूमा०वुञ् । कूलभवे सौवीरे

**कौलकेय** त्रि० कुले सत्कुले भवः बा० ढक् कुक् च । १सत्कुलोद्भवे । कौलटेय+शब्दे० । २असतीपुत्रे पुंस्त्री शब्दरत्ना०

**कौलटिनेय** पुंस्त्री भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च । सत्या भिक्षुक्याः अपत्ये अमरः स्त्रियां ङीप्

**कौलटेय** पुंस्त्री कुलटायाः सत्याः असत्या वा अपत्यम् ढक् । सत्याः असत्याश्च भिक्षुक्याः अपत्ये अमरः । स्त्रियां ङीप् ।

**कौलटेर** पुंस्त्री कुलटायाः असत्या अपत्यम् आचारेण क्षुद्रत्वात् ("क्षुद्राभ्यः")पा०ढ्रक् । बन्धक्याः अपत्ये अमरः ।

**कौलत्थ** त्रि० कुलत्थेन संस्कृतम् अण् । कुलत्थसंस्कृते "पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः" सुश्रु० ।

**कौलत्थीन** न० कुलत्थस्य भवनं क्षेत्रम् खञ् । कुलत्थोत्पत्तियोग्ये क्षेत्रे

**कौलपुत्रक** न० कुलपुत्रस्य भावः मनोज्ञा० वुञ् । कुलपुत्रभावे

**कौलव** पु० ववादिषु तृतीये तिथ्यर्द्धरूपे चरकरणभेदे । करणशब्दे १६६० पृ० विवृतिः

**कौलालक** त्रि० कुलालेन कृतं संज्ञायां वुञ् । कुलालकृते शरावादौ असंज्ञायान्तु अण् कौलाल तत्कृते । तस्येदमण् कौलाल तत्सम्बन्धिनि त्रि० "रथचक्रं वा कौलालचक्रं वा" शत० ब्रा० ११।८।४।१

**कौलिक** त्रि०कुलादागतः ठक् । १कुलपरम्परागते आचारादौ । कुले कुलागमे सिद्धः ठक् । तन्त्रोक्ते २कुलाचरे । कौलं कुलधर्मं प्रवर्त्तयति ठक् । ३कुलधर्मप्रवर्त्तके शिवे । शब्दमा० । ४पाषण्डे त्रिका० । कुलं तदाचारः प्रयोजनमस्य ठक् ।५कौले ब्रह्मविदि"शक्तः कौलिकः"श्रुतिः

**कौलितर** पु० कुलितरस्यापत्यम् ऋष्यण् । शम्बरासुरे "उत दासं कौलितरं वृहतः पर्व्वतादधि । अवाहन्निन्द्र" शम्बरम्"ऋ०४।३०।१४ कुलितरनाम्नोऽपत्यं शम्बरमसुरम्"भा०

**कौलिशायनि** त्रि०कुलिश+चतुरर्थ्यां कर्णा० फिञ् । कुलिशसन्निकृष्टदेशादौ

कौलिशिक त्रि० कुलिश+अङ्गुल्या० इवार्थे ठक्। कुलिशसदृशे

कौलीन त्रि० कौ पृथिव्यां लीनः ७त०अलुक्स०। १भूमिलग्ने। कुलादागतः खञ्। २कुलक्रमागते "इदन्त्वयमनर्थ्यार्हं कौलीनां नावसन्तत" रामा०आ०८७अ०। ली-भावे क्त कौ लीनं लयो यस्मात्, कुलीनं भूमिलयमर्हति अण् वा। भूमिलग्नतासाधने ३अपवादे "कौलीनमात्माश्रयमाचचक्षे" "कौलीनभीतेन गृहान्निरस्ता" रघुः "मा कौलीनादसितनयने! मय्यविश्वासिनी भूः" मेघः अपवादे हि भूमिलग्नइव लोकोभवतीति तस्य तथात्वम्। ४गुह्ये ५जन्ये (युद्धे) ६कुकार्ये ७पशुसर्पादीनां युद्धे च न०मेदि०। तेषां भूमिलग्नतासाधनत्वात्तथात्वम्।

कौलीरा स्त्री कुलीरः तच्छृङ्गाकारोऽस्त्यस्याः अच्। कर्कटशृङ्ग्याम् (काँकडाशिङ्गा) राजनि०

कौलेय त्रि० कुले+भवः बा० ढक्। सत्कुलोत्पन्ने भरतः

कौलेयक पु० कुले भवः श्वा ढकञ्। १कुलागते कुक्कुरे। अमरः २सत्कुलीने मेदि०।

कौलेशभैरवी स्त्री त्रिपुराभैरवीभेदे। "सम्पत्प्रदाभैरवीवत् विद्धि कौलेशभैरवीम्। हसाद्याः सैव देवेशि! त्रिषु बीजेषु पार्वति!" ज्ञानार्णवः। "त्रिकूटे हसाद्यासेत् तदा कौलेशभैरवी भवति" तन्त्रसारः

कौल्माषिक त्रि० कुल्माषे साधु ठञ्। कुल्माषप्रसाधने

कौल्माषीण न० कुल्माषाणां भवनं क्षेत्रम् खञ्। कुल्माषधान्योत्पत्तियोग्ये क्षेत्रे

कौल्य त्रि० कुले भवः ष्यञ्। सत्कुलीने हेमचन्द्रकोषः।

कौवल न० कुवलमेव प्रज्ञा०स्वार्थे ण। कोलिफले हेमच०को०।

कौविदार्थ्य त्रि० कोविदार+चतुरर्थ्यां प्रगद्या० ञ्य। कोविदारसन्निकृष्टदेशादौ।

कौवेर त्रि० कुबेरस्येदम्, कुबेरोदेवताऽस्य वा अण्। १कुबेरसम्बन्धिनि २तद्देवताके च "कौवेरमथ याम्यञ्च चक्राते वरुणस्य च" देवीमा०। "यानं सस्मार कौवेरम्" रघुः। "कौवेरदिग्भागमपास्य मार्गम्" माघः। स्त्रियां ङीप्। "दिग्विभागे तु कौवेरी दिक् शिवाप्रीतिदायिनी" लि०त० पु०। "ततः प्रतस्थे कौवेरीम्" रघुः। ३कुष्ठद्रव्ये (कुड़) न० शब्दरत्ना०। [रिकाया अपत्ये।

कौवेरिकेय पुंस्त्री० कुबेरिकाया अपत्यम् शुभ्रा०ढक्। कुबे-

कौश न० कुशाः भूम्ना सन्त्यत्र अण्। १कान्यकुब्जदेशे हेमच०। स्वार्थेऽण्। २कुशद्वीपे "शाकं ततः शाल्मलमत्र कौशम्" सि० शि०। कुशशब्दे २१४५पृ० विवृतिः। कुशस्येदं तद्विकारो वा अण्। ३कुशसम्बन्धिनि ४तन्मये पवित्रादौ। "तत्र वासाय शयने कौशे सुखसुवास ह" भा०अनु० १९अ०। स्त्रियां ङीप्। "कौश्यां बृस्यां समासीनम्" भा० अनु० ५४अ०

कौशल न० कुशलस्य भावः युवा० अण्। दक्षतायाम् "सीमेव पद्मासनकौशलस्य" भट्टिः। "आन्वीक्षिकीं कौशलानाम्" "योगः कर्म्मसु कौशलम्" गीता। "व्यवहारे कुशिलं वचनानां कौशलं इमि विकारविशेषः" माघः।

कौशलि पुंस्त्री० कुशलाया अपत्यं बाह्वा० इञ्। कुशलाया अपत्ये स्त्रियां वा ङीप्। यूत्यपत्ये फञ्। कौशलायन तदीययुवापत्ये पुंस्त्री

कौशलिका स्त्री कुशलस्य पृच्छा ठक्। १कुशलप्रश्ने। कुशलाय मङ्गलाय दीयते ठक्। २उपायने उपढौकने। त्रिका०। [ढौकने २कुशलप्रश्ने च त्रिका०।

कौशली स्त्री कुशलाय दीयते तस्य पृच्छा वा अण्। १उप-

कौश(स)लेय स्त्री कोश(स)लाया अपत्यं ढक् यलोपः। श्रीरामे दशरथसुते

कौशल्य न० कुशलमेव ब्राह्मणा०ष्यञ्। १कुशले। भावे ब्राह्म० ष्यञ्। २दक्षतायाम्। "दृष्ट्वा कौशल्यमन्योन्यं रथश्रेयावतस्थिरे" भा० व० २४४अ०

कौश(स)ल्या स्त्री कोश(स)लदेशे भवा ञ्य। कोश(स)लदेशभवायां श्रीराममातरि दशरथपत्नीभेदे। [द्योऽप्यत्र।

कौश(स)ल्यातनय पु० ६त०। सीतापतौ श्रीरामे तत्सुता-

कौश(स)ल्यायनि पु०कौश(स)ल्याया अपत्यम् फिञ्। श्रीरामे त्रिका०"प्रियामहे न गच्छामः कौश(स)ल्यायनिवल्लभाम्" भट्टिः। कोश(स)ल्य पदार्थकता जयमङ्गलयुक्ता।

कौशाम्ब त्रि० कुशाम्बेन निर्वृत्तः अण्। १कौशाम्बराजकृते २तत्कृते पुरीभेदे स्त्री ङीप्। "कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्" रामा०। सा च पुरी गौडदेशान्तर्गतवत्सभूमिगता। "अस्ति वत्स इति ख्यातोदेश इत्युपक्रमे" कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी" कथासरित्सागरः। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो०। "निष्कौशाम्बिः" सि० कौ०

कौशाम्बेय पुंस्त्री कुशाम्बस्य गोत्रापत्यम् शुभ्रा०ढक्। कुशाम्बवंश्ये

कौशिक न० कुशिकस्यापत्यं ऋष्यण् कुशेन द्रुतः अध्या० ठञ्। कुशिके तद्वंशे भवः अण् वा। १इन्द्रे २पेचके पुंस्त्री० उभयत्र "अग्रजुषां शोढाशोरलोचनः सहस्राक्षे रिव

यस्य दर्शनम् । प्रविश्य हेमाद्रिगुहागह्वरान्तरं निनाय विस्मयाद्दिवसानि कौशिकः" माघः । इन्द्रस्य कुशिकपुत्रत्वप्राप्तिकथा "कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम् । लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्" हरिवं० १अ० । "कुशिकस्तु तपस्तेपे" इत्युपक्रम्य "अस्य ग्नतपसं दृष्ट्वा सहस्राक्षःपुरन्दरः । समर्थं पुत्रजनने स्वमेवांशमवासयत् । पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्" हरिवं० २७अ० । कुशेर्ढ तत्वाद्वा कौशिकत्वमस्य यथाह तत्रैव "जात मात्रस्तु भगवानदित्यां स(शक्रः)कुशेर्ढे तः । तदा प्रभृति देवेशः कौशिकत्वमुपागतः" हरि० २२७अ० । २गुग्गुलौ ४व्यालग्राहिणि (सापुड़े) अमरः । ५नकुले ७कोषाध्यक्षे मेदि० । ८कोषकारे शब्दरत्ना० ६शृङ्गाररसे त्रिका० १०मज्जनि हेम० ११अश्वकर्णवृक्षे राजनि० । कुशिकस्य गोत्रापत्यम् विदा० अञ् । १२विश्वामित्रमुनौ स हि कुशिकपुत्रस्य गाधेरपत्यम् । कुशिकशब्दे तन्मूलं दृश्यम् । "अपिबच्च ततः सोममिन्द्रेण सह कौशिकः" भा० आ० १७५ अ० ।

१३पौरववंश्ये नृपभेदे । "पारीक्षितस्य द्वौ पुत्रौ" इत्युपक्रमे "प्रतिष्ठायाश्च द्वौ पुत्रौ पैप्पलादिश्च कौशिकः" हरिव ९८१अ० । जरासन्धनृपस्य हंसनामके १४सेनापतिभेदे " स तु(जरासन्धः)सेनापती ! राजा सस्मार भरतर्षभ !! कौशिकं चित्रसेनञ्च तस्मिन् युद्धे उपस्थिते । ययोस्ते नामनी राजन् हंसेति डिम्भकेति च" भा० स० २१अ० । तस्य च कौशिकवंश्यत्वात् तथात्वम् । १५असुरभेदे "खङ्गमः शालवदनः करालः कौशिकः शरः" हरिव० ४२अ० । कुशिकवंशोद्भवत्वात् १६नदीभेदे स्त्री तस्या उत्पत्तिकथा रामा० आ० ३४अ०

"कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ! । पूर्व्वजा भगिनी चापि मम राघव ! सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता । सशरीरा गता स्वर्गं भर्त्तारमनुवर्त्तिनी । कौशिकी परमोदारा प्रवृत्ता च महानदी । दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकार्य्यार्थं प्रवृत्ता भगिनी मम । ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ! । सा तु सत्यवती पुण्या सत्ये धर्म्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा"

"तत्र मासं वसेद्वीर ! कौशिक्यां भरतर्षभ ! । अश्वमेधस्य यत् पुण्यं तन्मासेनाधिगच्छति" भा०व०८४अ० । "कुशिकस्याश्रमं गच्छेत् सर्व्वपापप्रमोचनम् । कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम् । राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः" तत्रैवाध्याये । "इयञ्च नदी हिमवतः निःसृता चम्पानगरसन्निकृष्टे उत्तरपारे गङ्गायां सङ्गता । "ततोगच्छेत राजेन्द्र ! चम्पकारण्यमुत्तमम्" ततइत्यकौशिकस्यास्तत्सन्निकृष्टत्वम् । १८यशोदाकन्यात्वेनोत्पन्नायां योगमायायाम् । कौशिकेन्द्रेण भगिनीत्वेन कल्पनेन विष्णुना तस्यास्तन्नामकरणात्तथात्वं यथोक्तम् "तत्र त्वां शतदृक् शक्रोमत्प्रदिष्टेन कर्म्मणा । अभिषेकेण दिव्येन दैवतैः सह योक्ष्यते । तत्रैव त्वां भगिन्यर्थे गृह्णीष्यति स वासवः । कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि" हरिव०५८अ०योगमायां प्रति विष्णूक्तिः । "आर्य्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी" भा० हरि०५६अ० । पार्व्वत्याः शरीरकोश(षा)न्निःसृते १९देवीमूर्त्तिभेदे तस्य च मूर्त्त्यन्यमध्यतापीति भेदः तन्मूलं देवीमाहात्म्यवाक्यं तच्च कोशशब्दे दर्शितं नाट्ये २०वृत्तिभेदे अलङ्कारशब्दे लक्षणादिकं दृश्यम् [ तथात्वम्

**कौशिकप्रिय** पु० ६त० । श्रीरामे विश्वामित्रप्रियाचरणात्तस्य

**कौशिकफल** कौषिक कोशस्य फलमस्य । नारिकेले शब्दरत्ना०

**कौशिका** स्त्री कोशएव स्वार्थे क अतइत्त्वम् । पानपात्रे चषके हेम० [ शब्दमाला १विश्वामित्रपुत्रे च

**कौशिकात्मज** पु० ६त० । १इन्द्रपुत्रे जयन्ते २अर्जुने च

**कौशिकायनि** पु० कुशिकस्यापत्यम् बा० फिञ् । यजुर्वेदवंशब्राह्मणस्ये ऋषिभेदे "कौशिकायनेः कौशिकायनिः" शत० ब्रा० १४।५।५।२१

**कौशिकायुध** न० ६त० । इन्द्रचापे शरत्ना०

**कौशिकाराति** पु०६त० । १काके राजनि०तस्य पेचकारातित्वं च तेन सह नित्यविरोधित्वात् । तत्कथा काकोलूकशब्दे दृश्या कौशिकारिप्रभृतयोऽप्यत्र पु०

**कौशिकिन्** पु० ब० व० कौशिकेन प्रोक्तमधीयते णिनि । विश्वामित्रप्रोक्ताध्यायिषु

**कौशिक्योज** पु० कौशिक्या इव ओजोयस्य पृषो० सलोपः । शाखोटवृक्षे (सेओड़ा) राजनि०

**कौशिज** पु० ब० व० देशभेदे "पञ्चालाः कौशिजाश्चैव नैकपृष्ठाः धुरन्धराः" भा० भी० ६अ० जनपदकथने

**कौशी(षी)धान्य** न० कोशे(षे)भवा कौशी(षी) कर्म्मधा०। कोश(ष)जाते धान्ये तिलादौ। "सर्व्वमेवैतदहः कोशी(षी)धान्यं विवर्ज्जयेत्" कात्या०श्रौ० २।१।१०

**कौशे(षे)य** न० कोशा(षा)दुत्थितम् ढक्। क्रिमिकोषादिजाते वस्त्रे अमरः "निनाभि कौशे(षे)यमुपात्तरागम्" कुमा० "कौशेयं व्रजदपि गाढतामजस्रम्" माघः "लाक्षालोहितकौशे(षे)यपरिधानम्" काद० "कौषेयाविकयोरूषैः" मनुना तच्छोधनद्रव्यमुक्तम्

**कौश्य** त्रि० कुशस्येदम् ष्यञ्। १कुशसम्बन्धिनि शयनादौ "प्रास्कन्दच्छयने कौश्ये दृष्ट्वा शय्यामिव स्रवम्" भा० अनु० ७१अ०। कुशस्य गोत्रापत्यं वा० ष्यञ्। २कुशगोत्रजे ऋषिभेदे पु० "तं होवाच सुश्रवाः कौश्यः" शत०ब्रा० १०।५।५।४ "कौश्यः कुशगोत्रजः" भा०; तेन ब्राह्मणे कौष्य इति मूर्द्धन्ययुक्तपाठस्तु प्रामादिकः।

**कौशा(सा)रव** पु० कुशा(षा)रोरपत्यम् ऋष्यण्। कुशा(षा)रोर्मुनेरपत्ये मैत्रेये "यावतः कृतवान् प्रश्नान् क्षत्ता कौशारवाग्रतः" भाग०१।१३।२ "कौशारवस्य मैत्रेयस्याग्रतः" श्रीधरः "ननु ते तत्त्वसंराध्य ऋषिः कौशारवोऽन्तिमे" भाग० २।४।२ वाह्वा० इञ्। कौशारविरप्यत्र "यत्र कौशारवेस्तस्य संवादोऽध्यात्मसंश्रितः" भाग०२।१०।५२

**कौषिक** त्रि० कौशिक+पृषो०। १कौशिकशब्दार्थे मेदि० २दुर्गामूर्त्तिभेदे स्त्री "शरीरकोषाद्यत्तस्याः पार्व्वत्याः निःसृताम्बिका। कौषिकीति समाख्याता ततो लोकेषु गीयते" देवीमा० "कायकोषान्निःसृता या कालिकायास्तु भैरव!। सा कौषिकीति विख्याता चारुरूपा मनोहरा" कालिका० पु० ६०अ०

**कौषीतक** पु० कुषीतकस्यापत्यम् ऋष्यण्। कुषीतकऋषिपुत्रे बह्वृचां प्रत्यहं तर्पणीये ऋषिभेदे कहोडे "कहोडं कौषीतकमित्यादि" आश्व० गृ० ३।४।३।२२ ऋषितर्पणे। कुषीतकस्यापत्यम् इञ्। कौषीतकिरपि कहोड़े ऋषौ "तदुहोवाच कहोड़ः कौषीतकिः" शत०ब्रा० २।४।२।१। तत्सम्बन्धित्वात् कौषीतकिब्राह्मणं कौषीतकी उपनिषच्च ऋग्वेदान्तर्गता।

**कौषीतकिन्** पु० ब० व०। कौषीतकेन प्रोक्तमधीयते णिनि। कौषीतकेन प्रोक्ताध्यायिषु। "सदस्यं सप्तदशं कौषीतकिनः समामनन्ति" आश्व०गृ०१।२३।५।

**कौ(षी)तकी** कुषीतकस्यापत्यम् ऋष्यण् ङीप्। अगस्त्यपत्न्यां त्रिका०

**कौषीतकेय** पुंस्त्री कुषीतक+वा० अपत्ये ढक्। कुषीतकस्यापत्ये कहोड़े "अथ हैनं कहोड़ः कौषीतकेयः पप्रच्छ" शत० ब्रा० १४।६।४।१।

**कौष्ठवितक** त्रि० कुष्ठविदि तद्विद्यायां साधु कल्या० ठक् इस्य चरत्वेन तान्ततया ठस्य क इत्येके। कुष्ठविद्यासाधौ। इस्य चत्वाभावमाश्रित्य तान्तत्वाभावेन कौष्ठविदिक इत्यन्ये तन्मतेनैव तथारूपं २१५४पृ० उक्तम्

**कौसीद्य** न० कुत्सितं सीदत्यस्मिन् सीद+वा० आधारे श स्वार्थे ष्यञ्। १आलस्ये २तन्द्रायाञ्च हेम०। कुसीदस्य भावः ष्यञ्। ३वृद्धिरूपकुसीदवृत्तौ शब्दचि०

**कौसुम** न० कुसुमेन निर्वृत्तम् अण्। १पुष्पाञ्जने अमरः। तस्येदम् अण्। २पुष्पसम्बन्धिनि त्रि० "विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन" माघः

**कौसुम्भ** पु० कुसुम्भ+स्वार्थे अण्। १अरण्यकुसुम्भे २शाकभेदे राजनि०। कुसुम्भेन रक्तम् अण्। ३कुसुम्भरागरञ्जिते वस्त्रादौ त्रि० "कौसुम्भं पृथु कुचकुम्भसङ्गि वासः" माघः। तस्येदम् अण्। कुसुम्भसम्बन्धिनि त्रि० "दिनकरकरसङ्गव्यक्तकौसुम्भरागम्" माघः। उभयतः स्त्रियां ङीप्।

**कौसुरुविन्द** पु० दशरात्रसाध्ययागभेदे "कौसुरुविन्दः" कात्या०श्रौ०सू०२३।५।१८। "द्वितीयो दशरात्र एतत्संज्ञः" सं०व्या०। प्रायणीययागानन्तरं कौसुरुविन्ददशरात्रस्य प्रथमे त्र्यहे च "कौसुरुविन्दः प्रथमत्र्यहः" कात्या० २४।१।१

**कौसुरुविन्दि** पु० कुसुरुविन्दस्यापत्यम् इञ्। तदपत्ये उद्दालके मुनौ "कौसुरुविन्दिरुद्दालक आरुणौ ब्रह्मचर्य्यमुवास" शत० ब्रा० १२।२।२।१३। [ कौ जटाध०

**कौसृतिक** त्रि० कुसृत्या चरति ठक्। मायाकारके शाठ्यु-

**कौस्तुभ** पु० कुं भूमिं स्तुभ्नाति कुस्तुभो जलधिः तत्र भवः अण्। विष्णोर्वक्षःस्थे "कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः" इत्युक्तलक्षणे मणिभेदे। तस्य समुद्रादुत्पत्तिकथा हरिवं० २२अ०

"सुरासुरगणाः सर्व्वे सहिता लवणाम्भसः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च। समाः सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत। तज्जह्रुरसुराः पूर्व्वमाक्रान्ता लोभमन्युना। तदा पश्चाज्जह्रुर्देवाः कामतेजोबलान्विताः। धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभो मणिः। शशाङ्को विमलश्चापि समुत्तस्थुः

क्षमन्ततः" । "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः । श्रीरनन्तरमुत्पन्ना घृतात् पाण्डुरवासिनी । सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा । कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसम्भवः । मरीचिविकचः श्रीमान् नारायण उरोगतः" भा०आ०१८अ० "उच्चैः श्रवाहयश्रेष्ठो मणिरत्नञ्च कौस्तुभम्" रामा० उक्तेः क्लीवत्वमपि "कौस्तुभाख्यमपांसारं बिभ्राणं बृहतोरसा" "सकौस्तुभं ह्रेपयतीव वक्षः" रघुः । २तैलभेदे न० "घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् । आज्यं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते । तैलाभावे ग्रहीतव्यं तैलं जर्त्तिलसम्भवम् । तदभावेऽतसीस्नेहं कौस्तुभं सर्षपोद्भवम् । वृक्षस्नेहोऽथवा ग्राह्यः पूर्व्वाभावे परःपरः" कर्कधृतं मण्डनवाक्यम् । कौस्तुभमित्यत्र कौसुम्भमिति पाठस्तु सम्यक् । ३तन्त्रोक्ते मुद्राभेदे "अनामाङ्गुष्ठसंलग्ना दक्षिणस्य कनिष्ठिका । कनिष्ठयान्यया बद्धा तर्ज्जन्या दक्षया तथा । वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके । अङ्गुष्ठमध्यमे भूयः संयोज्य सरलाः पराः । चतस्रोऽप्यत्र संलग्ना मुद्रा कौस्तुभसंज्ञिका" तन्त्रसारः ।

**कौस्तुभवक्षस्** पु० कौस्तुभोवक्षसि यस्य । विष्णौ हारा० कौस्तुभहृदयादयोऽप्यत्र पु० । एवं कौस्तुभलक्षणादयोऽप्यत्र ।

**क्नथ** वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् । क्नथयाम्-बभूव आस चकार—चक्नथ-चक्नाथ ।

**क्नस** दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट् । क्नस्यति अक्नसीत्-अक्नासीत् चक्नास । घटा० क्नसयति-ते । अचिक्नसत्-त उदित् क्नसित्वा-क्नस्त्वा ।

**क्नस** दीप्तौ वा० चु० उभ० पक्षे भ्वा० अक० सेट् घटादि क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् क्नसयां बभूव आस चकार चक्ने चक्नास । उदित् क्नसित्वा-क्नस्त्वा । "ध्वृ ह्वृतौ क्नस् कुसि किचि भासने कुस इश्लिषि" बोपदेवव्याख्याने "परोऽनुबन्धः पूर्वेषामेकयाश्रयस्यत्वात्" इति तदुक्तिमाश्रित्य भ्रान्त्या दुर्गादासेन क्नस इदित्त्वमुक्तम् तच्चिन्त्यम् । पा० धातुपाठे चुरादिषु "वसिपिसि कुसि दशि कुशी" इत्यादिना कुसेरेवेत्त्वमुक्तेः दिवादिषु च क्नसु ह्वरणदीप्त्योरित्युक्तेः वटादौ च जनीजृष क्नसु रञ्ज इति पाठात् इदित् क्नसधातोरदर्शनात् । अतः परानुबन्धस्य [illegible]ो स्वेवात्र प्रसक्तिः [illegible]न स वा चुरादित्वम् अन्यथा कुसियत् क्नसीत्येव मूलकृत् पठेत् । न च तथाऽपाठि अतस्तस्य नेदित्त्वम् ।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आत्म० अक० सेट् । क्नूयते अक्नूयिष्ट चुक्नूये । णिचि क्नोपयति ते । अस्य चेलार्थककर्म्मण्युपपदे णमुल् चेलक्नोपम् वस्त्रक्नोपम् । "धूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु वहथे मदनेन" माघः । 'वस्त्रं क्नोपयित्वा परिषिच्येत्यर्थः' मल्लि० । अभि+अतिव्याप्त्या आर्द्रीभावकरणे पूतीभावकरणे च सक० "आपो वै सर्व्वमन्नं ताभिर्हीदमभिक्नूयमिवादन्ति" शत० ब्रा० १४।१।१।१४। यान्तत्वात् ताच्छील्ये नातोयुच् किन्तु तृच् । क्नूयिता इत्येव ।

**क्मर** कौटिल्ये भ्वा० पर० अक० सेट् । क्मरति अक्मा(क्म)रीत् चक्मार ।

**क्य** त्रि० कः प्रजापतिस्तस्मै हितः यत् । प्रजापतिहिते । "तेभ्य चत्वारि क्यानां क्यानीति" प्रश्ने "एतान्येव चत्वारि क्यानां क्यानि" शत० ब्रा० १०।३।४।२।४। भा० तथार्थतोक्ता

**क्याम्बू** स्त्री क्यं प्रजापतिहितमम्बु यत्र ऊङ् । दूर्वाभेदे "क्याम्बूरत्रारोहतु शाण्डदूर्वा व्यल्कशा" अथ०१८।३।६।

**क्रंश** प्रकाशने भ्वा० सक० सेट् क्रंशति अक्रंशीत् चक्रंश । "क्रंशतेर्वा प्रकाशयतिकर्म्मणः । निरुक्तकारः २।२५।

**क्रकच** पुंक्ली इति कचति शब्दायते कच-शब्दे अच् । १ग्रन्थिलाख्ये वृक्षे मेदि० । २दारुदारणास्त्रे करपत्रे (करात) पु० न० अमरः । ज्योतिषोक्ते ३योगभेदे च । तल्लक्षणञ्च "षष्ठ्यादितिथयो मन्दात् विलोमं क्रकचः स्मृतः" इति "यथा शनौ षष्ठी, शुक्रे सप्तमी, गुरावष्टमी, बुधे नवमी, भौमे दशमी, सोमे एकादशी, रवौ द्वादशी, एते योगाः क्रकचाख्या ज्ञेयाः" पी०धा० । यदाह नारदः "त्रयोदश स्युर्मिलने संख्ययोस्तिथिवारयोः" क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः" क्रकचदलादयोऽप्यत्र

**क्रकचच्छद** पु० क्रकच इव छदो यस्य । केतकीवृक्षे त्रिका०

**क्रकचपत्र** पुं०क्रकच इव पत्रमस्य । १शाकवृक्षभेदे राजनि० २केतकीवृक्षे च ।

**क्रकचपाद(द्)** पु० क्रकचमिव पादो यस्य वा अन्त्यलोपः । क्रकलासे हारा०

**क्रकचपृष्ठी** स्त्री क्रकच इव पृष्ठं यस्याः ङीष् । (कइ) मत्स्यभेदे । त्रिका० ।

**क्रकचव्यवहार** पु० लीलावत्युक्ते क्रकचच्छेद्यवस्तुनोवेतन ज्ञानार्थे तत्फलज्ञापके गणितभेदे यथा "क्रकचव्यवहारे करणसूत्रं वृत्तम् । पिण्डयोगदलमग्रमूलयोर्दैर्घ्यसङ्गुणितमङ्गुलात्मकम् । दारुदारणपथैः

क्रमाहृतं षट्स्वरेषुविहृतं करात्मकम् । उदाहरणम् ।
मूले नखा(२०)ङ्गुलमितोऽथ नृपा(१६)ङ्गुलोऽग्रे पिण्डः शताङ्गुलमितं किल यस्य दैर्घ्यम् । तद्दारुदारणपथेषु चतुर्षु किं स्याद्धस्तात्मकं वद सखे ! गणितं द्रुतं मे ।
(तदाकारदर्शनार्थचित्रम्)




न्यासः
पिण्डयोगशद्दलं । १८ । दैर्घ्येण १०० सङ्गुणितं १८०० । दारुदारणपथैश्चतुर्भिर्गुणितं ७२०० । षट्स्वरेषु ५७६ विहृतं जातं करात्मकं गणितं २५/२ । क्रकचान्तरे करणसूत्रं सार्द्धवृत्तम् । छिद्यते तु यदि तिर्य्यगुक्तवत्पिण्डविस्तृतिहतेः फलं तदा । इष्टिकाचितिदृषच्चितिखातक्राकचव्यवहृतौ खलु मूल्यम् । कर्म्मकारजनसम्मतिवशात्तन्मृदुत्वकठिनत्ववशेन । उदाहरणम् । यद्विस्तृतिर्द्दन्त ३२ मिताङ्गुलानि पिण्डस्तथा षोडश यत्र काष्ठे । छेदेषु तिर्य्यङ्नवसु प्रचक्ष्व किं स्यात् फलं तत्र करात्मकं मे ॥
न्यासः विस्तारः ३२ पिण्डः ।१६। पिण्डविस्तृतिहतिः
(तदाकारचित्रम्।)




५१२ । दारुदारणमार्गैर्नवभिर्हता ४६०८ । षट्स्वरेषु ५७६ विहृता जातं फलं हस्ताः । ८ ।"

**क्रकचा** स्त्री क्रकचसदाकारोऽस्त्यस्याः अर्श० अच् टाप् । केतकीवृक्षे रत्नमा० ।

**क्रकण** पु० क्र इति कणति शब्दायते कण—अच् । (कयार) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष् ।

**क्रकर** पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्ये ट । (कयार) १पक्षिभेदे अमरः स्त्रियां ङीष् । २करीरवृक्षे ३करपत्राख्ये च पु० ४दीने त्रि० हेमच० "चोरयित्वा तु पक्षीणं क्रकरत्वं नियच्छति" भा० अनु० १११अ० । "चकोरकलविङ्कमयूरक्रकरेत्याद्युपक्रमे "विष्किरालवः शीतमधुराः कषाया दोषशमनाश्च" इति सामान्यत उक्त्वा "वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः । लघवः क्रकराः हृद्यास्तथा चैवोपचक्रकाः" सुश्रु० तन्मांसगुणा उक्ताः ।

**क्रतु** पु० कृ-कतु । १यूपसहिते, सोमसाध्ये यज्ञे, २सङ्कल्पे, ३ब्रह्मणोमानसे पुत्रे ऋषिभेदे, ४वैश्वदेवभेदे, ५इन्द्रियेषु च । ६विष्णौ तस्य सर्व्वयज्ञमयत्वेन सयूपयज्ञरूपत्वमपीष्टं यथाह "यज्ञैरिज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः" विष्णुस० । "सर्व्वयज्ञस्वरूपत्वात् यज्ञः यूपसहितोयज्ञः क्रतुरिति" भाष्यम् । तेन क्रतुशब्दस्य यूपसहितयज्ञबोधकता । अतएव तत्तद्यागे यूपविशेषाः शतपथब्राह्मणादौ उक्ताः । तत्र सोमसाध्ययागाश्च नव क्रतवः "त्रीन् क्रतूनन्वाहाग्ने यक्रुषस्सख्याश्विनम्" श्रुतौ "द्वत्यग्नेयः क्रतुः अशोषस्यः" "अथाश्विनः" आश्व०श्रौ० ४।११।८।१४।१।१५।१। सूत्रेषु दर्शिताः । अन्येऽपि क्रतवोवेदेषु दर्शितास्ततएवावगन्तव्याः । सङ्कल्पश्च कामनाधीनः चित्तवृत्तिभेदः यथोक्तम् "कामः क्रतुः कर्म्म जन्मो ह्येवमेषां क्रमोभवेत् । पुंसोया विषयामेच्छा स काम इति भण्यते । सएव वर्द्धमानश्चेत् क्रतुत्वं प्रतिपद्यते" । "रुचेरतिशयः काम्ये विषये क्रतुरीर्य्यते" इत्युक्ते ७रुचेराधिक्ये च । ८प्रज्ञायां निघ० । ९स्तवनादिकर्म्मणि च । "पुरुहूत ! क्रत्वा नः शग्धि" ऋ० ४।२१।१०। "क्रत्वा कर्म्मणा स्तुत्यादिरूपेण" भा० । क्रतुनामा मुनिश्च "ब्रह्मणोमानसाः एते विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" भा० आ०६५अ० उक्तः । "क्रतोरपि क्रियाभार्य्या वालिखिल्यानसूयत । ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा" भाग० ४।१।२२। तदुत्पत्त्याद्युक्तम् "ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन् मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । वसिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान्" हरिवं० १अ० । विश्वेदेवाश्च तत्रोक्ता यथा
"आत्मार्थे चासृजत् पुत्त्रान् लोककर्तॄन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्व्वमन्त्रपदं पुण्यं नाम्ना

